शर्करास्नान (સાકરથી સ્નાન કરાવવું)

इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका
मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥

मूलं धूमावत्यै नमः । शर्करास्नानं समर्पयामि ॥

पञ्चामृतस्नान (પંચામૃતથી સ્નાન કરાવવું)

पयोदधि घृतं चैव मधुं च शर्करायुतम् ।
पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥

मूलं धूमावत्यै नमः । पञ्चामृत स्नानं समर्पयामि ॥

शुद्धोदकस्नान (તીર્થજળથી સ્નાન કરાવવું)

मंदाकिन्यां समानीतैः हेमाम्भोरुहवासितम् ।
स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः ॥

मूलं धूमावत्यै नमः । शुद्धोदकस्नानं समर्पयामि ॥

वस्त्र (વસ્ત્ર અર્પણ કરવાં)

शीतावातोष्ण संत्राण लज्जाया रक्षणं परम् ।
देहालंकरणं वस्त्रमतः शान्तिः प्रयच्छ मे ॥

मूलं धूमावत्यै नमः । वस्त्रोपवस्त्राणि च समर्पयामि ।

अक्षत (ચોખા ચઢાવવા)

अक्षतान् निर्मलान् शुद्धान् मुक्ताफलसमन्वितान् ।
गृहाणेमान् महादेवि देहि मे निर्मलं धियम् ॥

मूलं धूमावत्यै नमः । अक्षतान् समर्पयामि ॥

पुष्पमाला (ફૂલહાર અર્પણ કરવો)

पद्मशंखज पुष्पादि शतपत्रै विचित्रताम् ।
पुष्पमालां प्रयच्छामि ते धूमावति शिवे ॥

मूलं धूमावत्यै नमः । पुष्पमालां समर्पयामि ॥

पुष्प (પુષ્પો અર્પણ કરવાં)

मन्दारपारिजातादि पाटलकेतकानि च ।
जातीचम्पकपुष्पाणि गृहाणेमानि शोभने ॥

मूलं धूमावत्यै नमः । धत्तूर पुष्पं समर्पयामि ॥

**धूप (ધૂપ પ્રગટ કરવો)**

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

मूलं धूमावत्यै नमः । गुग्गुल धूपं आघ्रापयामि ॥

**दीपक (દીવો બતાવવો)**

आज्यं च वर्ति संयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेशि त्रैलोक्य तिमिरापहम् ॥

मूलं धूमावत्यै नमः । दीपं दर्शयामि ॥

**नैवेद्यम् (નૈવેદ્ય અર્પણ કરવો)**

आधारोपरि देवी पुरतः नैवेद्यं संस्थाप्य, मूलेन सम्प्रेक्ष्य, सम्पूज्य, मूलेन अभिमन्त्र्य, धेन्वाऽमृतीकृत्य, वामाङ्गुष्ठेन पात्रं स्पृशन् दक्षिणेन

जलमादाय (ચમચીમાં જળ લેવું)

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेत गृहाण-परमेश्वरि ॥

इति पठित्वा अमृतोपस्तरणमसि स्वाहा इति देव्यै जलमर्पयेत् । वामकरे पद्ममुद्रां बध्वा, दक्षिणकरेण प्राणादि पञ्चमुद्राभिरर्पयेत् । यथा-प्राणाय स्वाहा, अपानाय स्वाहा, उदानाय स्वाहा, व्यानाय स्वाहा, समानाय स्वाहा ।

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्ताद् ।
दिव्याकल्पै ललितरमणी वीज्यमाना सखीभिः ॥
नर्मक्रीडाप्रहसनपरा हासयन्ती सुरेशान् ।
भुङ्क्ते पात्रे कनकखचिते षड्रसान् लोकधात्री ॥

इति पठित्वा किञ्चिन्मूलं प्रजप्य मध्ये पानीयं दत्वा, पुनः क्षणं विलम्ब्य, अमृताऽपिधानमसि स्वाहा इति जलं दत्वा ततः हस्त प्रक्षालनं, मुख प्रक्षालनं, गण्डूषान् कारयित्वा आरार्तिकं कुर्यात् ।

આ પ્રમાણે બોલીને કેટલીકવાર મૂલમંત્રનો જપ કરી મધ્ય જળ નૈવેધ નિવેદનની વચ્ચે અર્પણ કરવું. ક્ષણના વિલંબ પછી 'अमृतापिधानमसिस्वाहा ।' બોલી જળ અર્પણ કરવું. પછી હાથ, મુખ ધોવા માટે અને આચમન માટે જળ અર્પણ કરવું. ત્યારબાદ નીચે દર્શાવેલ આવરણ પૂજનના બે પ્રકારો પૈકી કોઈપણ એક પ્રકારે ધૂમાવતી યંત્ર પ્રાણ પ્રતિષ્ઠિત કર્યું હોય તેનું વિધિવત્ આવરણપૂજન કરવું.

# आवरण पूजन

(પ્રથમ પ્રકાર)




ધૂમાવતી પૂજન-યંત્ર

पुष्पांजलिमादाय

संविन्मये परे देवि परामृतरसप्रिये ।
अनुज्ञां देहि मातस्त्वं परिवारार्चनाय मे ॥

भूपुरे पूर्वादिक्रमेण

ॐ लं इन्द्राय नमः इन्द्र श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ रं अग्नये नमः अग्नि श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ मं यमाय नमः यम श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ क्षं निऋतये नमः निऋति श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ वं वरुणाय नमः वरुण श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ यं वायवे नमः वायु श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ सं सोमाय नमः सोम श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ हं ईशानाय नमः ईशान श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ आं ब्रह्मणे नमः ब्रह्म श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ यं अनन्ताय नमः अनन्त श्री पादुकां पूजयामि तर्पयामि नमः ।

[पूर्वादि क्रमेण इन्द्रादि दिक्पाल समीपे स्व-स्वायुधान् पूजयेत् ।]

ॐ वज्राय नमः वज्रं श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ शक्तये नमः शक्ति श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ दण्डाय नमः दण्डं श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ खड्गाय नमः खड्गं श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ पाशाय नमः पाशं श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ अंकुशाय नमः अंकुशं श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ गदायै नमः गदां श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ त्रिशूलाय नमः त्रिशूलं श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ पद्माय नमः पद्मं श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ चक्राय नमः चक्रं श्री पादुकां पूजयामि तर्पयामि नमः .

[ततः पङ्क्त्याकारेणोपविष्ठान् दिव्यौघादि गुरून् नत्वा पुष्पाञ्जलिं दत्त्वा-]

ॐ परमशिवानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ पराशक्त्यम्बा श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ पराधिनन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ कुलेश्वरानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ शुक्लादेव्यम्बा श्री पादुकां पूजयामि तर्पयामि नमः
ॐ कामेश्वरानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ कामेश्वर्यम्बा श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ सिद्धौघेभ्यः पराख्येभ्यो गुरुभ्यो नमः ।

[इति पुष्पाञ्जलिं दत्त्वा]

ॐ भोगनन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ क्लिन्नानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ समयानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ सहजानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ मानवौघेभ्यः पराख्येभ्यो गुरुभ्यो नमः ।

[इति पुष्पांञ्जलिं दत्त्वा]

ॐ गगनानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ विश्वानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ विमलानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ भुवनानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ मदनानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ लीलानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ स्वात्मानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।
ॐ प्रियानन्दनाथ श्री पादुकां पूजयामि तर्पयामि नमः ।

ततः परमेष्ठिगुरुं परमगुरुं स्व गुरुं च तर्पयेत् । ततः
अभीष्टसिद्धिं मे देहि शरणागत वत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

[पुष्पाञ्जलिं दद्यात् ।]

ततो अष्टदले पूज्यपूजकयोरन्तराले प्राची क्रमेण-

ॐ क्षुधायै नमः क्षुधा श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ तृष्णायै नमः तृष्णा श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ रत्यै नमः रति श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ निद्रायै नमः निद्रा श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ निद्रायै नमः निद्रा श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ निर्ऋत्यै नमः निर्ऋति श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ दुर्गत्यै नमः दुर्गति श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ रुषायै नमः रुषा श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ अक्षमायै नमः अक्षमा श्री पादुकां पूजयामि तर्पयामि नमः ।

पुष्पाञ्जलिं दद्यात्

अभीष्ट सिद्धि मे देहि शरणागत वत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

षट्कोण केशरेषु आग्नेयादिचतुर्दिक्षुमध्ये दिक्षु च षड्ङ्गानि पूजयेत् । तद्यथा-

ॐ धूं धूं हृदयाय नमः हृदय देवी श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ धूं शिरसे स्वाहा शिरो देवी श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ मां शिखायै वषट् शिखा देव श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ वं कवचाय हुं कवच देवी श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ तिं नेत्रत्रयाय वौषटे नेत्र देवी श्री पादुकां पूजयामि तर्पयामि नमः ।

ॐ स्वाहा अस्त्राय फट् अस्त्र देवी श्री पादुकां पूजयामि तर्पयामि नमः ।

ततो मध्ये देव्यग्रे - बिन्दौ

धूं धूं धूमावति स्वाहा । इति त्रिवारं सन्तर्प्य-
अभीष्ट सिद्धि मे देहि शरणागत वत्सले ।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

इति आवरण पूजनम्

અહીં ધૂમાવતી યંત્રની આવરણ પૂજાનો પ્રથમ પ્રકાર થોડો વિસ્તૃત છે તે પૂર્ણ થાય છે.

હવે પછી આવરણ પૂજાનો બીજો પ્રકાર જે દર્શાવ્યો છે તે સંક્ષિપ્ત છે. બંને પ્રકાર આવરણ પૂજન માટે સ્વીકાર્ય છે. સમયાવકાશ અને ગુરુના માર્ગદર્શન મુજબ ધૂમાવતી યંત્રનું આવરણ પૂજન સાધકે કરવું જોઈએ.

# ધૂમાવતી યંત્ર આવરણ પૂજન

(બીજો પ્રકાર)

## आवरण-पूजा

प्रथमावरण

ॐ धूं धूं हृदयाय नमः ।

हृदय श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ धूं शिरसे स्वाहा ।

शिरः श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ मां शिखायै वषट् ।

शिखा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ वं नमः कवचाय हुम् ।

कवच श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ तिं नेत्रत्रयाय वौषट् ।

नेत्रत्रय श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ स्वाहा अस्त्राय फट् ।

अस्त्र श्रीपादुकां पूजयामि तर्पयामि नमः ।

ઉપર મુજબ ષડંગ પૂજા કરી, હાથમાં પુષ્પાંજલિ ગ્રહણ કરી 'धूं धूं धूमावती स्वाहा ।' એ પ્રમાણે મૂલ મંત્રના ઉચ્ચારણ સાથે

अभीष्ट सिद्धि मे देहि शरणागत वत्सले ।

भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

એ પ્રમાણે બોલીને પુષ્પાંજલિ અર્પણ કરતાં 'पूजितांस्तर्पिता द्वितीयावरण स्सतु' એ પ્રમાણે કહેવું. હવે યંત્રના અષ્ટદળમાં પૂજ્ય અને પૂજકમાં અંતરાલને પૂર્વદિશા માનીને અને દિશાઓની કલ્પના કરી પૂર્વાદિ ક્રમથી અષ્ટ શક્તિઓનું નીચેના ક્રમથી પૂજન કરવું.

ॐ क्षुधायै नमः ।

क्षुधा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ तृष्णायै नमः ।

तृष्णा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ रत्यै नमः ।

रति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ निद्रायै नमः ।

निद्रा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ निर्ऋत्यै नमः ।

निर्ऋत्यै श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ दुर्गत्यै नमः ।

दुर्गति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ रुषायै नमः ।

रुषा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ अक्षमायै नमः ।

अक्षमा श्रीपादुकां पूजयामि तर्पयामि नमः ।

પૂજનોપરાંત મૂલમંત્ર 'धूं धूं धूमावती स्वाहा' નું ઉચ્ચારણ કરી अभीष्टसिद्धि मे देहि शरणागत वत्सले । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥ એ પ્રમાણે પુષ્પાંજલિ અર્પણ કરતા 'पूजितास्तर्पितास्सन्तु ।' કહેવું અને ભૂપુરમાં પૂર્વાદિક્રમથી ઇન્દ્રાદિ દશ દિક્પાલો તથા તેનાં વજ્રાદિ આયુધોનું પૂજન કરી પુષ્પો અર્પણ કરવાં.

આ પ્રમાણે આવરણપૂજન કર્યા પછી પુષ્પ, ધૂપ, દીપ, મહાનૈવેદ્ય વગેરે ઉપસ્કરો (પૂજન સામગ્રી) અર્પણ કરવાં. પૂર્વક્રમાનુસાર દેવીની આગળ અર્પણ કરી પૂર્વવત્ પૂજન કરવું. ત્યારબાદ ધેનુમુદ્રા પ્રદર્શિત કરી 'अमृतोपस्तरण मसि स्वाहा ।' બોલી વિશેષ અર્ઘ્યજળ અર્પણ કરવું અને પછી નૈવેદ્ય દેવીને અર્પણ કરવું. પ્રાણાદિ પંચમુદ્રા પ્રદર્શિત કરવી.

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
पंचधा षड्रसोपेतं गृहाण परमेश्वरि ॥
नैवेद्यं समर्पयामि प्राणादिपंचमुद्राभिरर्पयेत् ।
प्राणाय स्वाहा, अपानाय स्वाहा, व्यानाय स्वाहा ॥
स्वाहा, उदानाय स्वाहा, समानाय स्वाहा ।
ब्रह्मशास्त्रैः सरसमभितः सूपविष्टै समन्ताद् ।
दिव्याकल्पैर्ललितरमणी वीज्यमाना सखीभिः ॥
नर्मक्रीडा प्रहसनपरा हासयन्ती सुरेशान् ।
भुङ्क्तेपात्रे कनकखचिते षड्रसान् लोकधात्री ॥

આ પ્રમાણે કરી કિંચિત્ મૂલ મંત્ર 'धूं धूं धूमावती स्वाहा' એ મંત્રના જપ કરવા. નૈવેદ્યની મધ્યમાં પીવા માટે દેવીને જળ અર્પણ કરવું. ફરીથી ક્ષણના વિલંબ બાદ 'अमृतापिधानमसि स्वाहा' એ પ્રમાણે બોલી દેવીને જળ આપવું ત્યારપછી ગણ્ડુપાન (આચમન) કરાવી દેવીને મૂલમંત્ર બોલી પગમાં પહેરવાની પાદુકા અર્પણ કરવી.

ત્યારબાદ ઈશાન ખૂણામાં બટુકનાથને બલિ અર્પણ કરવો. નીચેના મંત્ર વડે બલિદાન કરવું.

एहि एहि देवीपुत्र बटुकनाथ कपिलजटाभारभासुर त्रिनेत्र ज्वालामुख सर्वविघ्नान् नाशय नाशय सर्वोपचार सहित बलिं गृह्ण गृह्ण स्वाहा, बटुकाय एष बलिर्न मम ।

આ પછી કવચ - સ્તોત્રાદિના પાઠ કરવા અને મૂલમંત્રના જપ કરવા. જપાન્તે સિંદૂર વડે બિંદુ, ત્રિકોણ, ચોરસ મંડળનું નિર્માણ કરી તેના ઉપર બલિદ્રવ્ય સ્થાપન કરી નીચેના મંત્ર વડે પૂજન કરી દેવીને પ્રધાનબલિ અર્પણ કરવો.

'धूं धूं धूं धूर धूर धूमावती क्रीं स्वाहा फट् ।'

-એ મંત્ર વડે બલિ અર્પણ કરવો અને ધૂમાવતી દેવીની પ્રાર્થના કરવી. भो धूमावती सर्वेश्वरि इमं बलिं गृहीत्वा भो भो अनुग्रहाण । એમ બોલવું.

આ પછી આરતી પુષ્પાંજલિ પ્રદક્ષિણા નીચેના ક્રમથી કરવા.

ततः आरार्तिक्यं कुर्यात् (આરતી કરવી)

अन्तस्तेजो बहिस्तेजो एकीकृत्य निरन्तरम् ।
त्रिधा देव्युपरिभ्राम्य कुलदीपं निवेदये ॥
चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।
त्वमेव सर्वज्योतिस्त्वमार्तिक्यं प्रतिगृह्यताम् ॥

पुष्पांञ्जलि (મંત્રપુષ્પાંજલિ)

नानाविधानि पुष्पाणि यथाकालोद्भवानि च ।
पुष्पांञ्जलिं मया दत्तं गृहाण परमेश्वरि ॥

प्रदक्षिणा (પ્રદક્ષિણા કરવી)

यानि कानि च पापानि जन्मान्तरकृतानि च ।
तानि सर्वाणि प्रणश्यन्ति प्रदक्षिणं पदे पदे ॥

ततः उद्वासनं कुर्यात् सामान्यार्घ्य पात्रमुद्धृत्य देव्युपरि भ्रामयित्वा-

साधुवाऽसाधु वा कर्म यद् यदाचरितं मया ।
तत्सर्वं भगवत्यम्ब गृहाणाराधनं परम् ॥

इति पठित्वा इतः पूर्वं मां मदीयंञ्च श्री धूमावती देवतायै समर्पयामि नमः । ततः अवशिष्ट सामान्यार्घ्य जलेन स्वशिरसि सम्मार्ज्य, सामयिकान् सम्प्रोक्ष्य, देव्युपरितनं पुष्पं संहारमुद्रया गृहीत्वा, स्वयमाघ्राय, देवी चैतन्यं स्वहृदि स्थापयित्वा, मानसैः सम्पूज्य, हस्ताभ्यामर्घ्यपात्रमादाय स्वशिरसि धृत्वा-

देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक ।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ॥
इति सम्प्रार्थ्य, पुष्पाक्षतान् निक्षिपेत् ।
॥ इति धूमावती पूजापद्धतिः समाप्त ॥

(આ પ્રમાણે ધૂમાવતી પૂજા પદ્ધતિ સમાપ્ત)

પુરશ્ચરણ : પૂર્વોક્ત પ્રકારથી આવરણ-પૂજન કરી, ધૂપદાનથી નમસ્કાર પર્યંત પૂજા કરવી અને સ્મશાનમાં સર્વથા નગ્ન થઈને મંત્રજપ કરવા.

આનું પુરશ્ચરણ એક લાખ મંત્રજપનું છે. જપનો દશાંશ તલમિશ્રિત ઘીથી હોમ અને હોમનું દશાંશ તર્પણ, તર્પણનું દશાંશ માર્જન અને માર્જનનું દશાંશ બ્રાહ્મણ ભોજન કરાવવું જોઈએ. આ વિધિથી મંત્રસિદ્ધિ પ્રાપ્ત થાય છે.

કામ્ય પ્રયોગ :

મંત્રસિદ્ધિ થયા પછી કામ્ય પ્રયોગો કરવા જોઈએ. ધ્યાનોપરાન્ત સ્મશાનમાં જઈ એકદમ નગ્ન કેવળ રાત્રિના સમયે ભોજન કરનારો સાધક જપની દશાંશ સંખ્યા મુજબ તલથી હોમ કરે. આ રીતે જયેષ્ઠાની પૂજા કર્યા બાદ જ્યારે મંત્ર સિદ્ધ થઈ જાય ત્યારે નીચે દર્શાવ્યા પ્રમાણે આવશ્યકતા અનુસાર કામ્ય પ્રયોગ કરવા જોઈએ.

(૧) 'ફેત્કારિણી તંત્ર' અનુસાર સાધક હાડકાની ઉપર મંત્ર લખી, તેમાં શિવલિંગનું સ્થાપન કરી મંત્રજપ કરે. શિવને 'अवष्टभ्य' કરીને શત્રુના નામથી મંત્ર જપ કરવા જોઈએ.

(૨) કૃષ્ણપક્ષની ચતુર્દશી (વદ પક્ષની ચૌદસ)ના દિવસે ઉપવાસ કરવો. માથાના વાળ ખુલ્લા રાખવા તથા નગ્ન(નિર્વસ્ત્ર) દશામાં એકાંત ઘરમાં, સ્મશાનમાં, વનમાં અથવા ગુફામાં, ખાડામાં અથવા પર્વત પર શબના ઉપર બેસીને દેવીનું ધ્યાન કરતા રહી એક લાખની સંખ્યામાં મંત્રજપ કરવા, ત્યારબાદ રાઈમાં મીઠું(નમક) મેળવીને હોમ કરવો. આથી સાધકના શત્રુ શીઘ્ર નષ્ટ થાય છે.

(૩) આ મંત્રના ૫૦૦ની સંખ્યામાં જપ કરવાથી શત્રુ જ્વરપીડિત થાય છે. જ્વરની શાંતિ પંચગવ્ય અથવા જળથી થાય છે.

(૪) વનમાં અડધી રાતના સમયે શત્રુનું નામ લેતા રહીને સવા લાખ મંત્ર જપ કરવાથી સાધકમાં ઉત્સાહ ઉત્પન્ન થાય છે. પછી સ્મશાનમાં અગ્નિમાં કાગડાને બાળી ભસ્મ કરી ભસ્મને અભિમંત્રિત કરી શત્રુના મસ્તક ઉપર ફેંકવાથી તત્કાળ ઉચ્ચાટન થાય છે.

(૫) આ મંત્ર દ્વારા અભિમંત્રિત ભસ્મને શત્રુના ઘરમાં દાટી દેવાથી શત્રુનું ઉચ્ચાટન થાય છે.

(૬) કૃષ્ણ પક્ષમાં સ્મશાનની ભસ્મ દ્વારા શિવલિંગ નિર્મિત કરવું. તેના ઉપર શત્રુના નામ સાથે ન્યાસ કરીને તેની પૂજા કરવી. આથી સ્વપ્નમાં ભેંસનું રૂપ ધારણ કરીને મંત્ર શત્રુનો વિનાશ કરે છે.

(૭) સ્ત્રી-રજનો ધૂપ પ્રદાન કરવાથી કાલિકા ગૃધ્રુ(ગીધ) રૂપમાં જઈને શત્રુને મારે છે. એની શાંતિ નિર્માલ્યથી થાય છે.

(૮) વારાહકર્ણ જડીનો ધૂપ આપી ૧૦૦૮ વાર મંત્રજપ કરવાથી ભગવતી શૂકર (ભૂંડ)નું રૂપ ધારણ કરી શત્રુને મારી નાંખે છે. એની શાંતિ પીપળાના પાનના ધૂપથી થાય છે. પંચગવ્ય, દૂધ અથવા ત્રિમધુથી સર્વ પ્રકારની શાંતિ થાય છે.

# ફેત્કારિણી સિદ્ધિ

હવે અહીં 'ફેત્કારિણી-તંત્ર' તથા અન્ય તંત્રોના મતાનુસાર ધૂમાવતી મંત્રની સામાન્ય પ્રયોગ વિધિનું વર્ણન કરવામાં આવે છે. મંત્ર - ૐ ધૂં ધૂં ધૂમાવતી ઠઃ ઠઃ। અથવા 'ધૂં ધૂં ધૂમાવતી સ્વાહા ।'

'શાક્ત પ્રમોદ'માં આ મંત્રનો ઉદ્ધાર અલગથી આ પ્રમાણે આપવામાં આવ્યો છે.

दान्तौसार्वीश विन्द्वत-बीजे धूमावती द्वि-ठः ।
धूमावती मनुः प्रोक्तो, वैरि निग्रह कारकः ॥

આ ઉદ્ધાર અનુસાર જ તે મંત્રને આ રીતે સ્પષ્ટ કરવામાં આવ્યો છે – 'धूं धूं धूमावती ठः ठः ।'

'મંત્ર મહાર્ણવ'માં 'મંત્ર મહોદધિ' અનુસાર જ મંત્ર આપવામાં આવ્યો છે. સાથે જ પાદ-ટિપ્પણીમાં 'તંત્રસાર' અનુસાર મંત્રનું બીજું રૂપ આ રીતે જ આપવામાં આવ્યું છે- 'धूं धूं धूमावती ठः ठः ।'

'શ્રી શ્રી વિદ્યાર્ણવ તંત્ર'માં ફેત્કારિણી તંત્ર' અનુસાર જે મંત્રોદ્ધાર આપવામાં આવેલ છે, તે 'શાક્ત પ્રમોદ'ના ઉદ્ધરણની અપેક્ષાએ અધિક શુદ્ધ છે. જેમકે - दान्तावर्धीश-विन्द्वन्तौ बीजे धूमावती ठः ठः ।

એની વ્યાખ્યા પણ ત્યાં આ પ્રમાણે આપવામાં આવી છે –

दान्तौ धकार-द्वयं अर्धीश-विन्द्वन्तौ पृथगूंकार-संयुक्तौ
बिन्दु-युक्तौ च धूमावती-स्वरूपं, ठ-द्वयं स्वाहा-कारः

આ વ્યાખ્યા અનુસાર મંત્ર આ પ્રમાણે બને છે – धूं धूं धूमावती स्वाहा ।

વિનિયોગ 'મંત્ર મહાર્ણવ' અનુસાર ઉક્ત અષ્ટાક્ષર મંત્રનો વિનિયોગ આ પ્રમાણે છે–

(१) अस्य धूमावती मन्त्रस्य श्रीपिप्पलाद ऋषिः । निचृद छन्दः । श्री धूमावती देवता । धूं बीजं । स्वाहा शक्तिः । धूमावती कीलकं ममाभीष्ट-सिद्धयर्थे जपे विनियोगः।

વળી ત્યાં પાઠ ભેદે પણ રજૂ કરેલ છે તે મુજબ વિનિયોગનું સ્વરૂપ આ પ્રમાણે છે.

(२) अस्य धूमावती मंत्रस्य श्री पिप्पलाद ऋषिः । निचृद छन्दः । ज्येष्ठ देवता। धूं बीजं । स्वाहा शक्तिः । धूमावती कीलकं । शत्रु-हनने जपे विनियोगः ।

**ऋष्यादिन्यास**

पिप्पलाद ऋषये नमः (शिरसि) ।
निवृच्छन्दसे नमः (मुखे) ।
धूमावत्यै देवतायै नमः (हृदि) ।

**कराङ्गन्यास**

धां अंगुष्ठाभ्यां नमः ।
धीं तर्जनीभ्यां नमः ।
धूं मध्यमाभ्यां नमः ।
धैं अनामिकाभ्यां नमः ।
धौं कनिष्ठिकाभ्यां नमः ।
धः करतलकरपृष्ठाभ्यां फट् ।

**षडङ्गन्यास**

धां हृदयाय नमः ।
धीं शिरसे स्वाहा ।
धूं शिखायै वषट् ।
धैं कवचाय हुम् ।
धौं नेत्र त्रयाय फट् ।

**ध्यान**

विवर्णा चञ्चला रुष्टा दीर्घा च मलिनाम्बरा ।
विमुक्त कुंतला रूक्षा विधवा विरलद्विजा ॥
काकध्वज रथारूढा विलम्बित पयोधरा ।
शूर्प हस्तातिरक्ताक्षी धृतहस्ता वरान्विता ॥
प्रवृद्ध घोणा तु भृशं कुटिला कुटिलेक्षणा ।
क्षुत् पिपासार्दिता नित्यं भयदा कलहप्रिया ॥

ધ્યાનોપરાંત આગળ દર્શાવ્યા પ્રમાણે પૂજન કરવું જોઈએ. ત્યારબાદ મંત્રજપનો આરંભ કરવો.

પુરશ્ચરણ : ધૂમાવતી મંત્રના પુરશ્ચરણ હેતુ અનુષ્ઠાન કરવું હોય ત્યારે કૃષ્ણપક્ષની ચતુર્દશી (ચૌદશ)થી ઉપવાસ કરીને તથા કોઈ નિર્જન ઘર, સ્મશાન અથવા વનપ્રદેશમાં રાત-દિવસ મૌનવ્રતી બની એક લાખની સંખ્યામાં ઉપરોક્ત મંત્ર પૈકી કોઈ એક મંત્રના જપ કરવા. સાધકે પુરશ્ચરણના સમયે ગરમ અથવા ભીનાં વસ્ત્ર ધારણ કરવા આવશ્યક છે.

પછી શત્રુનું નામ લખી તેના ઉપરના ભાગે મૂળમંત્ર લખવો. તેની ઉપર શિવલિંગ સ્થાપિત કરી પૂજન કરવું અને જપ આરંભ કરવા.

અન્યત્ર એવો પણ ઉલ્લેખ છે કે - શિવલિંગનું નિર્માણ કરી 'अमुक' (અહીં શત્રુના નામનું ઉચ્ચારણ કરી મારય બોલી જપ કરવા જોઈએ. આ વિધિથી ૫૦૦ વાર જપ કરવાથી શત્રુ જ્વરગ્રસ્ત થાય છે. પંચગવ્ય અથવા દૂધ વડે હોમ કરવાથી તેનો જ્વરથી છૂટકારો થાય છે. આ પછી પંચોપચારથી દેવીનું પૂજન કરવું અને જપ કરવા જોઈએ.

કામ્ય પ્રયોગ :

(૧) કૃષ્ણ પક્ષમાં સ્મશાનની ભસ્મથી શિવલિંગ બનાવીને તેના પર શત્રુના નામ સહિત ઉક્ત મંત્ર લખીને પૂજા કરવી તથા ભેંસના દૂધ વડે ધૂપ આપી જે પદાર્થ શત્રુના અમંગળ સૂચક છે તેમને પ્રદાન, પ્રદાન કરતા રહી પૂજન કરવાથી દેવી મહિષી(ભેંસ)નું રૂપ ધારણ કરી શત્રુનો શીઘ્ર વિનાશ કરી દે છે.

(૨) પ્રેતભૂમિ-સ્મશાનની ભસ્મ લાવી શિવલિંગનું નિર્માણ કરવું અને પુષ્પાદિથી તેનું પૂજન કરવું. પછી 'હે ભગવાન !' એ પ્રમાણે તેમને સંબોધન કરી, મનોમન કર્તવ્યનું ચિંતન કરી લીમડાના પાન તથા કાગડાના પીંછા એકત્ર કરવા અને તેમના ઉપર ૧૦૮ વાર મંત્ર જપ કરવા. પછી 'अमुकं द्वेषय द्वेषय' એમ બોલી મૂળમંત્રનું ઉચ્ચારણ કરતા રહી ધૂપ પ્રદાન કરવો. ('अमुक' શબ્દના સ્થાન પર શત્રુઓના નામનું ઉચ્ચારણ કરવું જોઈએ.) આ પ્રયોગથી શત્રુ વર્ગમાં પરસ્પર દ્વેષ ઉત્પન્ન થાય છે. ચિતાકાષ્ટના અગ્નિમાં દૂધનો હવન કરવાથી આ વિદ્વેષની શાંતિ થાય છે.

(૩) 'વરાહકર્ણ' દ્વારા ધૂપ દેવાથી દેવી રાત્રિના સમયે શૂકર(ભૂંડ)ના રૂપમાં આવી શત્રુકુળનો નાશ કરી દે છે.

(૪) સ્મશાનના અગ્નિમાં કાગડાને દગ્ધ(બાળીને) કરીને તેની ભસ્મને ઉક્ત મંત્રથી ૧૦૮ આઠ વાર અભિમંત્રિત કરવી. શત્રુના નામનું ઉચ્ચારણ કરતા રહી આઠે દિશાઓમાં ફેંકવાથી શત્રુનું ઉચ્ચાટન થાય છે.

(૫) હરિદ્રાપત્ર (હળદરના પાન) પર શત્રુનું નામ લખીને કોઈ વનમાં ફેંકી દઈ તેના ઉપર પૂર્વોક્ત મંત્રના દસ હજાર જપ કરવાથી શત્રુનું ઉચ્ચાટન થાય છે.

(૬) શત્રુના બંને પગ નીચેની ધૂળ તથા ઘી દ્વારા પક્ષીઓની બલિ આપી, ચિતા ભસ્મના ઉપર મૂળ મંત્રના જપ કરવા. પછી તે ભસ્મને, ગુપ્ત રીતે શત્રુના ઘરમાં પહોંચાડી દેવાય તો શત્રુનું ઉચ્ચાટન થશે.

(૭) ઔદુમ્બર (ઉમરો-ઉમરડા) આદિ ક્ષીરીવૃક્ષ (દૂધવાળા ઝાડ)ની ખીલી બનાવી, તેના ઉપર શત્રુના નામ સહિત ધૂમાવતી મંત્ર લખવો. પછી તે ખીલી ઉપર મૂળમંત્રનો જપ કરી, શત્રુના બંને પગને જમીનમાં ખીલી દ્વારા જડી દેવાની ભાવના કરવી એટલે શત્રુનું ઉચ્ચાટન થશે.

(૮) અશ્વત્થ પત્ર (પીપળાના પાન)નો ધૂપ આપી, પંચગવ્ય અથવા કેવળ દૂધ અથવા ઘી, મધ અને સાકર મિશ્રિત 'ત્રિમધુ' દ્વારા હોમ કરવાથી સર્વ પ્રકારના અભિચાર દોષોની શાંતિ થાય છે.

# શત્રુહન્તા ધૂમાવતી મંત્રપ્રયોગ

ધૂમાવતી સાધના મૂલતઃ તાંત્રિક સાધના છે. ભૂત-પ્રેત, પિશાચ તો એવી રીતે ગુમ થઈ જાય છે કે જેવી રીતે જળને અગ્નિમાં નાંખતાં જ જેમ પોતાનું સ્વરૂપ છોડીને વરાળ થઈ જાય છે. સ્વયં ક્ષુધા સ્વરૂપ ભૂખી મા હોવાને લીધે, અર્થાત્ ભૂખથી પીડિત હોવાને કારણે એને પોતાને કંઈને કંઈ ભક્ષણ કરવા જોઈએ જ. એટલે સાધક એની સાધના કરે છે, તો તે પ્રસન્ન થઈને સાધકની સમસ્ત બાધારૂપી શત્રુઓનું ભક્ષણ કરી લે છે. બાધાઓ ચાહે કેટલીયે વિકરાળ અથવા વિશાળ હોય અહીં દર્શાવેલ વિધાન પ્રમાણે ધૂમાવતી સાધના કરવાથી બાધાઓ પર અવશ્ય વિજય પ્રાપ્ત થાય છે. આ સાધનાનો ઉપયોગ ખોટાં કામ માટે કરવો ન જોઈએ, અન્યથા લાભને બદલે નુકસાન પણ થઈ શકે છે. આ સાધનાની મુખ્ય શરત છે.

**સાધના વિધાન :**

આ સાધના માટે કોઈ શનિવારની રાત્રિએ સ્નાન આદિથી નિવૃત્ત થઈ સ્વચ્છ કાળું વસ્ત્ર ધારણ કરી. કાળા ઊનનું આસન બિછાવી, દક્ષિણ દિશા તરફ મુખ કરી બેસી જવું.

પોતાની સામે બાજઠ ઉપર કાળું કપડું પાથરી તેના ઉપર સ્ટીલની થાળી રાખવી, તે થાળીની અંદરની બાજુએ કાજળ લગાડવું. ધૂમાવતી યંત્રને સ્નાન કરાવી થાળીમાં સ્થાપિત કરવું. તેની સાથે કાગડાનું એક પીછું ગોઠવવું. તેની સન્મુખ ધૂમાવતી ખડ્ગમાળા સ્થાપિત કરવી. યંત્રનું પૂજન સિંદૂરથી કરવું. ધૂપ અને તેલનો દીપક પ્રજ્વલિત કરવા. અને હાથ જોડી નીચે પ્રમાણે ધૂમાવતીનું ધ્યાન કરવું. 'શાક્તપ્રમોદ' નામક ગ્રંથમાં ધૂમાવતીનું ધ્યાન નીચે પ્રમાણે વર્ણવેલ છે.

विवर्णा चंचला रुष्टा दीर्घा च मलिनाम्बरा ।
विमुक्त कुंतलारूक्षा विधवा विरल द्विजा ॥
काकध्वजरथारूढा विलंबित पयोधरा ।
शूर्पहस्तातिरक्ताक्षी धृतहस्ता वरान्विता ॥
प्रवृद्धघोणा तु भृंश कुटिला कुटिलेक्षणा ।
क्षुत्पिपासार्दिता नित्यं भयदा कलहास्पदा ॥

આ પછી હાથમાં જળ ગ્રહણ કરી સંકલ્પ કરવો કે (અમુક) ગોત્રનો, (અમુક) પિતાનો પુત્ર (અમુક) નામનો સાધક પૂર્ણ ક્ષમતાની સાથે ભગવતી ધૂમાવતીની સાધના કરી રહ્યો છું. તે મારાં તમામ વિઘ્નોનો નાશ કરે. એમ બોલી જળ જમીન ઉપર છોડી દેવું.

આ પછી હાથમાં અથવા આચમનીમાં ફરીથી જળ લઈને આ પ્રમાણે વિનિયોગ કરવો અને પછી નીચે દર્શાવેલ ન્યાસ કરવા જોઈએ.

**विनियोग**

अस्य धूमावती मंत्रस्य पिप्पलाद ऋषिः निवृच्छन्दः, ज्येष्ठा देवता, धूं बीजं, स्वाहा शक्तिः, धूमावती कीलकं ममाभीष्ट सिद्ध्यर्थे शत्रुहनने जपे विनियोगः ।

**ऋष्यादिन्यास**

ॐ पिप्पलाद ऋषये नमः (शिरसि) ।
निवृच्छन्दसे नमः (मुखे) ।
ज्येष्ठा देवतायै नमः (हृदि) ।
धूं बीजाय नमः (गुह्ये) ।
स्वाहा शक्तये नमः (पादयोः) ।
धूमावती कीलकाय नमः (नाभौ) ।
विनियोगाय नमः (सर्वाङ्गे) ।

**करन्यास**

ॐ धूं धूं अंगुष्ठाभ्यां नमः ।
ॐ धूं तर्जनीभ्यां नमः ।
ॐ मां मध्यमाभ्यां नमः ।
ॐ वं अनामिकाभ्यां नमः ।
ॐ तीं कनिष्ठिकाभ्यां नमः ।
ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः ।

**हृदयादिषडङ्गन्यास**

ॐ धूं धूं हृदयाय नमः ।
ॐ धूं शिरसे स्वाहा ।
ॐ मां शिखायै वषट् ।
ॐ वं कवचाय हुम् ।
ॐ तीं नेत्रत्रयाय वौषट ।
ॐ स्वाहा अस्त्राय फट् ।

આ પછી ધૂમાવતી યંત્ર પર પુષ્પ અર્પિત કરવાં અને ખડ્ગ માળાથી નીચે મુજબના મંત્રના ૨૧ માળા પ્રમાણે જપ કરવા.

મંત્ર - 'ॐ धूं धूं धूं धुरु धूमावती क्रों फट् ।'

આ પ્રયોગ સંપન્ન થયા પછી યંત્ર અને માળાનું નદીમાં વિસર્જન કરવું. આ ધૂમાવતી સાધનાનું વિશિષ્ટ ફળદાયક અત્યંત વિલક્ષણ વિધાન છે.

# મોક્ષદાતા શ્રી ધૂમાવતી મંત્રપ્રયોગ

सात्वतत्रितयं सार्धिवत्राद्यौ चन्द्रशेखरौ ।
वैकुण्ठऽन्त - संयुक्तो जलं नेत्र-युतो हरिः ।
अष्टाणो वह्नि - जायान्ता मन्त्रः शत्रुविनाशनः ॥

અર્થાત્ - 'सार्धि - सात्वत-त्रय' (ધૂ ધૂ ધૂ) આમાં પ્રારંભના બંને (ધૂ ધૂ) 'ચંદ્રશેખર નેત્રયુત હરિ' તિ અને અન્તમાં વહ્નિ જાયા 'स्वाहा' લગાડવાથી (જોડવાથી) આઠ અક્ષરનો શત્રુ વિનાશક મંત્ર આ પ્રમાણે 'धूं धूं धूमावति स्वाहा' (આઠ અક્ષરનો) બને છે. 'મંત્ર મહોદધિ' નામક ગ્રંથમાં ભગવતી ધૂમાવતીના મંત્રનો ઉદ્ધાર આ પ્રકારે આપવામાં આવ્યો છે. આ વ્યાખ્યા પ્રમાણે નિર્મિત મંત્ર છે- 'धूं धूं धूमावती स्वाहा ।'

पिप्पलादो निचृज्ज्येष्ठामुनि छन्दोऽस्य देवता ।
आद्य बीजद्वयांतस्थैः षडवर्णैरंगमीरितम् ।
श्मशाने संस्थितां ध्यायेज्ज्येष्ठां वायस संस्थिताम् ॥

વિનિયોગ અને ન્યાસ : આ મંત્રના ઋષિ પિપ્પલાદ છે, છંદ નિચૃદ છે તથા જ્યેષ્ઠા દેવતા છે. પ્રારંભના બંને બીજોથી ષડંગ ન્યાસ કરવા જોઈએ, પછી સ્મશાનમાં કાગડા (વાયસ) પર વિરાજમાન જ્યેષ્ઠા દેવીનું ધ્યાન કરવું જોઈએ.

विनियोग - अस्य धूमावती मंत्रस्य श्रीपिप्पलाद ऋषिः । निचृद छन्दः । ज्येष्ठा देवता । धूं बीजं । स्वाहा शक्तिः धूमावती कीलकं । ममाभीष्टसिद्धये जपे विनियोगः ।

न्यास

धूँ धूँ हृदयाय नमः । धूँ धूँ कवचाय हुँ ।
धूँ धूँ शिरसे स्वाहा । धूँ धूँ नेत्रत्रयाय वौषट् ।
धूँ धूँ शिखायै वषट् । धूँ धूँ अस्त्राय फट् ।

અથવા

धां अंगुष्ठाभ्यां नमः । धां हृदयाय नमः ।
धीं तर्जनीभ्यां स्वाहा । धीं शिरसे स्वाहा ।
धूँ मध्यमाभ्यां वषट् । धूं शिखायै वषट् ।
धैं अनामिकाभ्यां हुँ । धैं कवचाय हुँ ।
धौं कनिष्ठिकाभ्यां वौषट् । धौं नेत्रत्रयाय वौषट् ।
धः करतलकरपृष्ठाभ्यां फट् । धः अस्त्राय फट् ।

वर्णन्यास

अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं नमः हृदि ।
एं ऐं ओं औं अं अः कं खं गं घं नमः दक्षबाहौ ।

ङं चं छं जं झं ञं टं ठं डं ढं नमः वाम बाहौ ।
णं तं थं दं धं नं पं फं बं भं नमः दक्ष पादे ।
मं यं रं लं वं षं शं हं क्षं नमः वाम पादे ।

**ध्यान**

अत्युच्चमलिनाम्बराखिलजनोद्वेगावहादुर्मना
रूक्षाक्षित्रितयाविशालदशना सूर्योदरी चञ्चला ।
प्रस्वेदांबुचिता क्षुधाकुलतनुः कृष्णातिरूक्षप्रभा
ध्येया मुक्तकचा सदाप्रियकलिर्धूमावती मन्त्रिणा ॥

અર્થાત્ - અતિ ઊંચા કદવાળી, મેલાં વસ્ત્રો ધારણ કરેલી છે એવી, સર્વ લોકોને વ્યાકુળ કરનારી, ખિન્ન મનવાળી, ત્રણ રૂક્ષ નેત્રોવાળી મોટા દાંતવાળી, સૂર્ય જેવા પેટવાળી, ચંચલા, પરસેવાના પાણીથી ભીંજાયેલી, ભૂખથી વ્યાકુળ શરીરવાળી, કૃષ્ણવર્ણા, અતિ લુખી કાન્તિવાળી, વિખરાયેલ વાળવાળી, સદા કલહપ્રિયા ધૂમાવતીનું મંત્ર સાધકે ધ્યાન કરવું જોઈએ.

**જપસંખ્યા - હવન :**

एवं ध्यात्वा जपेल्लक्षं श्मशाने विगताम्बरा ।
निशाभोजी दशांशेन तिलैर्हवनमाचरेत् ॥

એવું ધ્યાન કરીને સ્મશાનમાં નિર્વસ્ત્ર થઈને કેવળ રાત્રિના સમયે ભોજન કરીને એક લાખ મંત્ર જપ કરવા જોઈએ. પછી તલથી દશાંશ હોમ કરવો જોઈએ. મુમુક્ષુઓએ અહીં રાત્રિભોજીનો અર્થ રાત્રે આહાર કરવાવાળા એવો સમજવાનો છે. અને ધૂમાવતીનું ધ્યાન કરી, એકાંતમાં રાત્રિના સમયે જાગરણ કરી દત્તચિત્ત(એકાગ્ર ચિત્તે) એક લાખ જપ કરવા જોઈએ.

**पूजाविधि**

पूर्वोक्ते पूजयेत्पीठे ज्येष्ठां शत्रुविनष्टये ।
केसरेषु षडंगानि पत्रस्था अष्टशक्तयः ॥
क्षुधातृष्णारतिर्निद्रानिर्ऋति दुर्गतीरुषा ।
अक्षमेति ततोदेवा इन्द्राद्या आयुधानि च ॥
एवं ज्येष्ठां समाराध्य सिद्धमन्त्र प्रजायते ।

શત્રુઓનો નાશ કરવા માટે પૂર્વોક્ત પીઠ પર જયેષ્ઠાનું પૂજન કરવું જોઈએ. કેસરોમાં ષડંગપૂજા તથા મંત્રોમાં આઠ શક્તિઓનું પૂજન કરવું જોઈએ. ક્ષુધા, તૃષ્ણા, રતિ, નિદ્રા, નિર્ઋતિ, દુર્ગતિ, રૂષા અને અક્ષમા (આ આઠ શક્તિઓ) છે. પછી ઈન્દ્ર આદિ દિક્પાલો અને તેમનાં આયુધોનું પૂજન કરવું જોઈએ.

**प्रयोग विधि**

उपोष्य कृष्ण भूताहे नग्नो मुक्तशिरोरुह ॥
शून्यागारे श्मशाने वा कान्तारे भूधरेऽथवा ।
प्रत्यहं प्रजपेन्निर्भीर्ध्यायन्देवीं क्षपाशनः ॥
एवं लक्षं जपन्मन्त्री नाशयेदचिरादरिम् ।
जुह्वता लवणोपेतां राजिकोनिशि तत्फलम् ॥

કૃષ્ણ પક્ષ(વદ)ની ચતુર્દશી (ચૌદશ)નો ઉપવાસ કરીને સુમસામ ઘરમાં, વનમાં યા પર્વત પર નગ્ન થઈને માથાના વાળ ખુલ્લા કરીને, નિર્ભીકતાપૂર્વક (કોઈપણ જાતના ડર વિના) દેવી ધૂમાવતીનું ધ્યાન કરતા રહી, પ્રતિદિન જપ કરવા જોઈએ તથા ફક્ત રાત્રિમાં ભોજન કરવું જોઈએ. (અર્થાત્ રાતભર જાગરણ કરીને કેવળ રાત્રિમાં જ જપ કરવા જોઈએ). આ પ્રકારે એક લાખ જપ કરવાથી મંત્ર સાધક શીઘ્રતાથી શત્રુઓનો નાશ કરવામાં સફળ થાય છે. (મુમુક્ષુઓ માટે શત્રુઓનું તાત્પર્ય આંતરિક શત્રુઓ છે) આંતરિક શત્રુઓ પર વિજય પ્રાપ્ત થાય એટલે મોક્ષપ્રાપ્તિ સહજ બની જાય છે.

# શ્રી ધૂમાવતી ગાયત્રી મંત્ર સાધના

ધૂમાવતીની અન્ય મંત્રસાધના ભલે ઉગ્ર મનાતી હોય પરંતુ ધૂમાવતી ગાયત્રી મંત્રસાધના તો એની અન્ય મંત્રસાધનાની અપેક્ષાએ સર્વાધિક સૌમ્ય અને કલ્યાણકારી છે. ગાયત્રી મંત્રથી સંપુટ પામ્યા પછી તો માતેશ્વરી ધૂમાવતી પરબ્રહ્મસ્વરૂપા બની જાય છે અને સાધકના ઉપર તેની અસીમ કૃપા વરસતી રહે છે.

સર્વ પ્રથમ બાજઠ ઉપર શ્વેત વસ્ત્ર પાથરી અગાઉ વર્ણવેલ ધૂમાવતી યંત્રનું સ્થાપન કરીને પૂજન સંપન્ન કરવું. પછી સફેદ પુષ્પો અર્પણ કરવાં અને નીચે દર્શાવેલ ધૂમાવતી ગાયત્રી મંત્રના ૫૧૦૦૦ મંત્ર સફેદ અકીકની માળા વડે સંપન્ન કરવા. આ જપ કરતાં પહેલાં નીચે પ્રમાણે કરન્યાસ અને હૃદયાદિ ન્યાસ(ષડંગ ન્યાસ) કરવા આવશ્યક છે.

**हृदयादि षडङ्गन्यास**

ॐ धूमावत्यै च हृदयाय नमः ।
ॐ विद्महे शिरसे स्वाहा ।
ॐ संहारिण्यै च शिखायै वषट् ।
ॐ धीमहि कवचाय हुम् ।
ॐ तन्नो धूमा नेत्रत्रयाय वौषट् ।
ॐ प्रचोदयादस्त्राय फट् ।

इति हृदयादि षडंगन्यासः । एवमेव करन्यासं च कुर्यात् ॥

ध्यान

अत्युच्चा मलिनाम्बराखिल जनोद्वेगावहा दुर्मना ।
रुक्षाक्षित्रितया विशालदशना सूर्योदरी चञ्चला ॥
प्रस्वेदाम्बुचिता क्षुधाकुलतनुः कृष्णातिरुक्षाप्रभा ।
ध्येया मुक्तकचा सदाप्रिय कलिर्धूमावती मन्त्रिणा ॥

धूमावती गायत्री -

ॐ धूमावत्यै च विद्महे संहारिण्यै च धीमहि । तन्नो धूमा प्रचोदयात्
॥ इति धूमावती गायत्री मंत्रः ॥

આ ધૂમાવતી ગાયત્રીની સાધના રાત્રિના સમયે કરવી અને મંત્ર જપ ઊભા રહીને કરવાના છે. અનુષ્ઠાન પૂર્ણ થયા પછી યંત્ર અને માળાનું નદીમાં વિસર્જન કરવું. આ મંત્રના પ્રભાવથી મા ધૂમાવતી સાધક પરત્વે શત્રુતાપૂર્ણ વ્યવહાર કરનારને પાઠ ભણાવે છે, સાધકનું રક્ષણ કરે છે.

# धूमावती माला मंत्र

તંત્રોક્ત સાધના અંતર્ગત 'ધૂમાવતી માલામંત્ર'નું ઘણું જ મહત્ત્વ છે. આ મંત્રનું પરિણામ ચમત્કારપૂર્ણ છે. ગ્રહપીડા નિવારણના હેતુ માટે, વ્યાધિનાશ માટે, શત્રુનાશ માટે તેમજ ભૂત-પ્રેતાદિથી મુક્ત થવા માટે આ મંત્ર અકાટ્ય અસ્ત્ર સમાન છે, જે સાધક આ મંત્રને સિદ્ધ કરી લે છે તે નિરાપદ યાને મુક્તિનો અધિકારી થાય છે. મંત્ર નીચે પ્રમાણે છે.

ॐ धूं धूमावति चतुर्दश भुवन निवासिनि सकलग्रहोच्चाटिनि सकलशत्रु रक्तमांस भक्षिणि मम शरीर रक्षिणि भूत-प्रेत पिशाच ब्रह्मराक्षसादि सकल ग्रह संहारिणि मम शरीर परमंत्र परयंत्र परतंत्र निवारिणि आत्ममन्त्र यन्त्र तन्त्र प्रकाशिनि मम शरीरे परकुट्टु परवादु परयेटु परजप परहोम परशून्य परदृष्टि परकौतुक परऔषधादिच्छेदिनि पट्टेरि काट्टेरि कन्नेरि पाट्टेरि शुनक काट्टेरि प्ररिटि काट्टेरि दर्भ काट्टेरि पाताल काट्टेरि सकलजात काट्टेरि ग्रहच्छेदिनि मम नाभि कमलस्थान संचारग्रह संहारिणि धूम्रलोचिनि उग्ररूपिणि सकलविषच्छेदिनि सकल विषसञ्चयान् नाशय नाशय मारय मारय विषमज्वर तापज्वर शीतज्वर वातज्वर लूतज्वर पैत्यज्वर श्लेष्मज्वर मोहज्वर सन्निपातज्वर पातालकाट्टेरिज्वर प्रेतज्वर पिशाचज्वर कृत्तिमज्वर नानादोषज्वर सकलरोगनिवारिणि सकलग्रहच्छेदिनि शिरश्शूल अक्षिशूल कुक्षिशूल कर्णशूल नाभिशूल कटिशूल पार्श्वशूल गण्डशूल गुल्मशूल अङ्गशूल सकलशूलान् निर्धूमय निर्धूमय सकलग्रहान्निवारय निवारय रां रां रां रां रां क्षां क्षां क्षां क्षां क्षां खें खें खें खें खें धूं ध्रूं ध्रूं ध्रूं ध्रूं फें फें फें फें फें धूं धूं धूं धूं धू धूमावती मां रक्ष रक्ष शीघ्रं शीघ्रं आगच्छागच्छ क्षिप्रमेव आरोग्यं कुरु कुरु हुं फट् धूं धूं धूमावती स्वाहा ।

## નાથ સંપ્રદાયનો ધૂમાવતી મંત્ર

માતા પાર્વતીએ ગુરુ ગોરખનાથ સમક્ષ પ્રગટ કરેલી દસ મહાવિદ્યાના મંત્રો પૈકીનો ભગવતી ધૂમાવતીનો નાથ સંપ્રદાયનો મંત્ર નીચે જણાવ્યા પ્રમાણે છે-

### ( ધૂમાવતી )

ॐ पाताल निरन्जन निराकार, आकाश मण्डल धुन्धुकार आकाश दिशा से कौन आये, कौन रथ कौन असवार, आकाश दिशा से धूमावन्ती आई, काकध्वजा का रथ असवार आई थरै धरती थरै आकाश, विधवा रुप लम्बे हाथ, लम्बी नाक कुटिल नेत्र दुष्टा स्वभाव, डमरु बाजे भद्रकाली, क्लेश कलह कालरात्रि । डंका डंकिनी काल किट किटा हास्यकरी । जीव रक्षन्ते जीव भक्षन्ते जाजा जीया आकाश तेरा होये । धूमावन्तीपुरी में वास, न होती देवी न देव तहां न होती पूजा न पाती तहां न होती जात न जाति तव आये श्री शम्भुजती गुरु गोरक्षनाथ आप भयी अतीत ।

ॐ धूं: धूं: धूमावती फट् स्वाहा: ।

ધૂમાવતીનું રહસ્ય જે શિવશંકર જોગી જાણે છે સંપૂર્ણપણે, તે માટે નાથ સંપ્રદાયમાં ગોરખનાથ કહે છે કે -

'आलस मोड़े, निद्रा तोडे तिस की रक्षा देवी धूमावन्ती करें ।'

## ધૂમાવતી સાધનાના વિશિષ્ટ પ્રયોગો

સમસ્યાઓનું વ્યક્તિના જીવનમાં આગમન તેનાં પોતાનાં કર્મોની સાથોસાથ તેના ભાગ્ય પર પણ નિર્ભર છે. કેટલીક વ્યક્તિઓનાં જીવનમાં સમસ્યાઓ નિરન્તર આવતી જ રહે છે, એક સમસ્યાને કોઈક રીતે ટાળે છે તો બીજી સમસ્યા આવીને હાજર થઈ જાય છે, અને સમસ્યાઓ સામે ઝઝૂમતા-લડતા જ જીવન સમાપ્ત થઈ જાય છે અને જીવનના ગણિતમાં કોઈ વિશેષ યોગફળ જોવામાં આવતું નથી.

જીવનની આ નિરન્તર સમસ્યાઓને કારણે વ્યક્તિ હર સમય આશંકિત અને આતંકિત રહે છે, તેના મનમાં હર ઘડી એક વિશેષ ભય છવાયેલો રહે છે અને આ ભય જ તેની હારનું, તેની સમસ્યાઓમાં વધારો થવાનું પ્રથમ કારણ બને છે. તેના મનમાં હર સમયે વિભિન્ન પ્રકારની આશંકાઓ ઊઠતી રહે છે. પોતે નોકરી પર જાય છે તો, તેને પોતાના સહયોગીઓથી અણબનાવ થવાનો ડર રહે છે. પોતાના અધિકારી તરફથી હેરાનગતિ થવાની આશંકા થાય છે. તેને એવું લાગે છે કે ક્યાંક તેનાથી એવી ભૂલ ન થઈ જાય, જેના કારણે તેને નીચું જોવાપણું થાય. અને આમ ભયગ્રસ્ત રહેવાથી પોતાનાં કામકાજમાં ભૂલ થઈ જ જાય છે.

પોતાના કાર્ય ઉપરાંત ઘર-પરિવારમાં પણ અશાંતિની આશંકા બની રહે છે. ભાઈઓ સગા-સ્નેહીઓથી દગો, સંતાન ખોટા માર્ગે, પતિ યા પત્ની સાથે વિના કારણે ઝઘડાનો ભય રહે છે. જે પ્રકારનું જીવન એ ભયના ઓથાર હેઠળ જીવે છે, તે જે વિપરીત પરિસ્થિતિઓની કલ્પના કરે છે, તે વિપરીત પરિસ્થિતિઓ કોઈ ને કોઈ રૂપમાં ઘટિત થઈ જ જાય છે. આવી પરિસ્થિતિમાં કેટલાક ધૂમાવતી પ્રયોગ આવી વ્યક્તિને સહાયભૂત થાય છે. જે પ્રયોગ અતિસરળ છે તે અહીં રજૂ કરું છું. પ્રથમ નીચે મુજબ ધૂમાવતી દેવીનું ધ્યાન કરવું.

ધ્યાન-

विवर्णा चंचला दुष्टा दीर्घा च मलिनाम्बरा,
विमुक्त कुन्तला रुक्षा विधवा विरलद्विजा ।
काकध्वज रथारूढा विलम्बित पयोधरा,
सूर्पहस्तातिरुक्षाक्षी धूतहस्ता वरान्विता ॥
प्रवृद्ध घोणा तु भृशं कुटिलो कुटिलेक्षणा ।
क्षुत् पिपासार्दिता नित्यं भयदा कलहप्रिया ॥

ઉપર મુજબનું ધ્યાન કરી નીચે દર્શાવેલ મંત્રનો ઉપયોગ પ્રસ્તુત દરેક પ્રયોગ માટે કરવો આવશ્યક છે.

मन्त्र : ॥ धूं धूं धूमावती ठः ठः ॥

પ્રયોગ :

(૧) કોઈ વ્યક્તિ તરફથી તમે અત્યધિક પરેશાન થતા હોવ તો તેને તેના સ્થાન પરથી હઠાવવા માટે આ ઉચ્ચારનો પ્રયોગ કરવો જોઈએ. હળદળ અને કેસરથી તે વ્યક્તિનું નામ 'ધૂમાવતી યંત્ર' ઉપર લખવું. યંત્ર બંને હાથોમાં ગ્રહણ કરી ભગવતી ધૂમાવતીનું ધ્યાન કરવું તથા હોળીના દિવસે હોલિકાગ્નિ સમક્ષ ઊભા રહીને ઉપરોક્ત મંત્રનો એકાવન(૫૧) વખત જપ કરવો હોલિકાગ્નિની એકવાર પ્રદક્ષિણા કરીને યંત્રને હોળીના અગ્નિમાં અર્પણ કરવું.

(૨) ઘરના પરિવારના સભ્યો ઉપર બહારનો કોઈ પ્રકોપ હોય તો તેનાથી સુરક્ષા પામવા માટે 'ધૂમાવતી યંત્ર'ને લાલ રંગના વસ્ત્ર ઉપર સ્થાપિત કરવું અને ભગવતી ધૂમાવતીનું ધ્યાન કરવું અને ઉપરોક્ત મંત્રની ત્રણ દિવસ સુધી એકોતેર(૭૧) આહુતિ ઘી તથા કાળા તલથી આપીને હોમ કરવો. ત્રણ દિવસ બાદ યંત્રને નદી કિનારે ખાડો ખોદીને દાટી દેવું.

(૩) કેટલીક વાર ઘર પરિવારજનોને હેરાન-પરેશાન કરવાના ઉદેશથી શત્રુ યા દુષ્ટ પ્રવૃત્તિ કરનારા લોકો ઘરનાં બાળકો ઉપર તાંત્રિક પ્રયોગ કરાવે છે. તે નાનાં-મોટાં બાળકોની સુરક્ષા માટે 'ધૂમાવતી યંત્ર'ની સામે ભગવતી ધૂમાવતીનું ધ્યાન કરી

ઉપરોક્ત મંત્રનું પાંસઠ(૬૫) વાર ઉચ્ચારણ કરવું, પછી તે યંત્ર બાળકની પથારીમાં ઓશીકાની નીચે મૂકી દેવું. પાંચ દિવસ પછી યંત્રને બાળકના માથા ઉપર ત્રણવાર ફેરવી ઘરથી દૂર દક્ષિણ દિશામાં ફેંકી દેવું.

(૪) કોઈ દુશ્મન આપના સ્વજન કે પ્રિયપાત્ર અને આપની વચ્ચે કલહ કે ઝઘડો કરાવવા માટે પ્રયત્ન કરી રહ્યા હોય અથવા આપની અને આપના સ્વજનની વચ્ચે દ્વેષ ઉત્પન્ન કરવાનો પ્રચાર કરી રહ્યા હોય તો એની સમાપ્તિ માટે આ પ્રયોગ કરવો. એક કાગળ ઉપર કાજળથી ત્રિશૂલ બનાવવું. તેના ઉપર ધૂમાવતી યંત્ર સ્થાપિત કરવું. ધૂમાવતીનું ધ્યાન કરીને ઉપરોક્ત મંત્રના પંચોતેર(૭૫) વાર જપ કરવા અને યંત્રને કાગળમાં લપેટી નાડાછડી વડે બાંધીને દક્ષિણ દિશા તરફ ફેંકી દેવું.

(૫) આપની ઉપર અવારનવાર તાંત્રિક ટૂચકાના પ્રયોગો થતા રહેતા હોય અને સાથે અનેક રીતે પરેશાની અનુભવતા હોવ ત્યારે તેના પ્રભાવની સમાપ્તિ માટે આ રીતે પ્રયોગ કરવો. એક તામ્રપાત્રમાં કંકુ વડે 'ધૂં' બીજ મંત્ર લખવો. પછી તેના ઉપર ધૂમાવતી યંત્ર સ્થાપિત કરવું. ધૂમાવતીનું ધ્યાન કરવું. ત્યાર બાદ ઉપરોક્ત મંત્ર એકાવન (૫૧) વાર બોલતા રહી જળ યંત્ર પર ચઢાવતા રહેવું. જપ સમાપ્ત કર્યા પછી જળને કોઈક છોડના મૂળમાં રેડી દેવું. આ પ્રયોગ ત્રણ દિવસ સુધી કરવો. પ્રયોગની સમાપ્તિના દિવસે યંત્રની સાથે પાંચ લાલ મરચાં અને થોડુંક મીઠું (નમક) રાખીને, કાગળમાં બાંધીને કોઈ નિર્જન સ્થાનમાં ફેંકી દેવું.

(૬) ઉપર મુજબ ભગવતી ધૂમાવતીનું ધ્યાન કરીને નીચે મુજબનો મંત્ર દસ હજાર વાર જપવાથી ગમે તેવો દોષ દૂર થવા લાગે છે. મંત્ર છે - धूं धूं धूमावती स्वाहा ॥

## धूमावती कवचम्

पार्वत्युवाच

धूमावत्यर्चनं शम्भो श्रुतं विस्तरयो मया ।
कवचं श्रोतुमिच्छामि तस्या देव वदस्य मे ॥

શ્રીપાર્વતીજી બોલ્યાં : હે શંભો ! ધૂમાવતી પૂજનના સંદર્ભમાં મેં ઘણી બધી જાણકારી પ્રાપ્ત કરી છે. હવે આપ કૃપા કરીને મને ધૂમાવતી કવચ બતાવો. એ જાણવા હું ખૂબ જ ઉત્સુક છું.

भैरवोवाच

शृणु देवि परं गुह्यं न प्रकाश्यं कलौयुगे ।
कवचं श्रीधूमवत्याः शत्रुनिग्रह कारकम् ॥
ब्रह्माद्या देवि सततं यद्वशादरिघातिनः ।
योगिनो भवन्ति शत्रुघ्ना यस्या ध्यान प्रभावतः ॥

ભૈરવજી બોલ્યા : હે દેવી ! ધૂમાવતી કવચ કલિકાળમાં અતિગુપ્ત છે તથા એના

પ્રભાવથી શત્રુઓનો નિગ્રહ થાય છે. હે પાર્વતી ! બ્રહ્માદિક દેવતાઓ પણ એના પ્રભાવથી શત્રુઓનો સંહાર કરી શક્યા છે. યોગીઓએ પણ તપમાં વિઘ્ન કરનારા શત્રુઓનો નાશ આ કવચના પ્રભાવથી કર્યો છે.

### विनियोग

ॐ अस्य श्रीधूमावती कवचस्य पिप्पलादऋषिरनुष्टुपछन्दः, श्री धूमावती देवता, धूं बीजं, स्वाहा शक्तिः, धूमावती कीलक शत्रुहनने पाठे विनियोग ।

### अथ कवचम्

ॐ धूं बीजं मे शिरः पातु धूं ललाटं सदावतु ।
धूमा नेत्रयुगं पातु वती कर्णौ सदावतु ॥
दीर्घा तूदरमध्ये तु नाभिं मे मलिनाम्बरा ।
शूर्पहस्ता पातु गुह्यं रूक्षा रक्षतु जानुनी ॥
मुखं मे पातु भीमाख्या स्वाहा रक्षतु नासिकाम् ।
सर्वविद्याऽवतु कण्ठ विवर्णा बाहुयुग्मकम् ॥
चञ्चला हृदयं घृष्टा पार्श्वेसदाऽवतु ।
धूमहस्ता सदाऽवतु धूमहस्ता सदा
पातु पादौ पातु भयावहा ॥
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा ।
क्षुत्पिपासार्दिता देवी भयदा कलहप्रिया ॥
सर्वाङ्ग पातु मे देवी सर्वशत्रुविनाशिनी ।
इति ते कथितं पुण्यं कवचं भुवि दुर्लभम् ॥
न प्रकाश्यं न प्रकाश्यं न प्रकाश्यं कलौ युगे ।
पठनीय महादेवि त्रिसन्ध्यं ध्यान तत्परैः ।
दुष्टाभिचारो देवेशि तद्गात्रं नैव संस्पृशेत् ॥

હે પાર્વતી ! મેં તમને દુર્લભ, પુણ્યદાતા કવચ કહ્યું છે. કલિકાળમાં એને સામાન્ય જનને નહીં બતાવવું જોઈએ. જે કોઈ આ કવચનો ત્રિસંધ્યા સમયે પાઠ કરે છે, તેના ઉપર અભિચાર કર્મોનો કોઈ પ્રભાવ પડતો નથી. અર્થાત્ પાઠ કરનારને કોઈપણ વ્યક્તિ કોઈપણ પ્રકારે હાનિ કરી શકતી નથી.

## धूमावती हृदयम्

### विनियोग

ॐ अस्य श्रीधूमावती, हृदयस्तोत्र मंत्रस्य पिप्पलाद ऋषिरनुष्टुपछन्दः, श्री धूमावती देवता, धूं बीजं, ह्रीं शक्तिः, क्लीं कीलकं, सर्वशत्रु संहरणे पाठे विनियोगः ।

## हृदयादिषडङ्गन्यास

ॐ धां हृदयाय नमः ।
ॐ धीं शिरसे स्वाहा ।
ॐ धूं शिखायै वषट् ।
ॐ धैं कवचाय हुम् ।
ॐ धौं नेत्रत्रयाय वौषट् ।
ॐ धः अस्त्राय फट् ।

## ध्यान

ॐ धूम्राभां धूम्रवस्त्रां प्रकटितदशनां मुक्तबालाम्बराढ्या,
काकाङ्कस्यन्दनस्थां धवलकरयुगां शूर्पहस्तातिरूक्षम् ।
नित्यं क्षुत्क्षामदेहां मुहुरतिकुटिलां वारिवांछाविचित्रां,
ध्यायेद्धूमावतीं वामनयन युगलां भीतिदां भीषणास्याम् ॥

## अथ हृदयम्

कल्पादौ या कालिकाद्याऽचीकलन्मधुकैटभौ ।
कल्पान्ते त्रिजगत्सर्वं धूमावतीं भजामि ताम् ॥
गुणागाराऽगम्यगुणा या गुणागुणवर्धिनी ।
गीता वेदार्थतत्त्वज्ञैर्धूमावतीं भजामि ताम् ॥
खट्वाङ्गधारिणी खर्वा खण्डिनी खलरक्षसाम् ।
धारिणी खेटकस्यापि धूमावतीं भजामि ताम् ॥
घूर्णघूर्णकरा घोरा घूर्णिताक्षी घनस्वना ।
घातिनी घातकानां या धूमावतीं भजामि ताम् ॥
चर्वन्तीमस्थि खण्डानां चण्डमुण्ड विदारिणीम् ।
चण्डाट्टहासिनीं देवीं भजे धूमावती महम् ॥
छिन्नग्रीवां क्षताच्छन्नां छिन्नमस्ता स्वरूपिणीम् ।
छेदिनीं दुष्टसङ्घानां भजे धूमावती महम् ॥
जाता या याचिता देवैरसुराणां विघातिनी ।
जल्पन्ती बहु गर्जन्ती भजे तां धूम्ररूपिणीम् ॥
झङ्कारकारिणीं झंझां झंझमाझमवादिनीम् ।
झटित्याकर्षिणी देवीं भजे धूमावतीमहम् ॥
टीपटङ्कार संयुक्तां धनुष्टंकार कारिणीम् ।
घोरां घनघटाटोपां वंदे धूमावतीमहम् ॥
ठंठंठंठंमनुप्रीतिं ठःठः मंत्रस्वरूपिणीम् ।

ठमकाह्वगति प्रीतां भजे धूमावतीमहम् ॥
डमरूडिंडिमारावां डाकिनीगण मण्डिताम् ।
डाकिनीभोग सन्तुष्टां भजे धूमावतीमहम् ॥
ढक्कानादेन सन्तुष्टां ढक्कावादक सिद्धिदाम् ।
ढक्कावाद चलच्चित्तां भजे धूमावतीमहम् ॥
तत्त्ववार्त्ता प्रियप्राणां भवपाथोधि तारिणीम् ।
तारस्वरूपिणीं तारां भजे धूमावतीमहम् ॥
थांथींथूंथें मंत्ररूपां थैंथौंथंथः स्वरूपिणीम् ।
थकार वर्णसर्वस्वां भजे धूमावतीमहम् ॥
दुर्गास्वरूपिणीं देवीं दुष्टदानव दारिणीम् ।
देवदैत्यकृत ध्वंसां वंदे धूमावतीमहम् ॥
ध्वान्ताकारांधक ध्वंसां मुक्तधम्मिल्ल धारीरिणीम् ।
धूमधाराप्रभां धीरां भजे धूमावतीमहम् ॥
नर्तकी नटनप्रीतां नाट्यकर्म विवर्द्धिनीम् ।
नारसिंहीं नराराध्यां नौमि धूमावतीमहम् ॥
पार्वतीपति सम्पूज्यां पर्वतो परिवासिनीम् ।
पद्मारूपां पद्मापूज्यां नौमि धूमावतीमहम् ॥
फूत्कारसहितश्वासां फट्मंत्र फलदायिनीम् ।
फेत्कारि गणसंसेव्या सेवे धूमावतीमहम् ॥
बलिपूज्यां बलाराध्यां बगलारूपिणीं वराम् ।
ब्रह्मादि वंदिताम् विद्यां वंदे धूमावतीमहम् ॥
भव्यरूपां भावाराध्यां भुवनेशी स्वरूपिणीम् ।
भक्तभव्यप्रदां देवीं भजे धूमावतीमहम् ॥
मायां मधुमतीं मान्यां मकरध्वजमानिताम् ।
मत्स्यमांस महास्वादां मन्ये धूमावतीमहम् ॥
योगयज्ञ प्रसन्नास्यां योगिनी परिसेविताम् ।
यशोदां यज्ञफलदां यजे धूमावतीमहम् ॥
रामाराध्य पदद्वन्द्वां रावणध्वंस कारिणीम् ।
रमेशरमणीं पूज्यामहं धूमावतीं श्रये ॥
लक्षलीला कलालक्ष्यां लोकवन्द्य पदाम्बुजाम् ।
लम्बितां बीजकोशाढ्य वन्दे धूमावतीमहम् ॥
बक पूज्यदाम्भोजां बकध्यान परायणाम् ।
बालां बकारि सन्ध्येयां वन्दे धूमावतीमहम् ॥

शङ्करी शङ्कर प्राणां सङ्कट ध्वंसकारिणीम् ।
शत्रु संहारिणीं शुद्धां श्रये धूमावतीमहम् ॥
षडाननारि संहन्त्रीं षोडशीरूप धारिणीम् ।
षडरसास्वादिनीं सौम्यां सेवे धूमावतीमहम् ॥
सुरसेवित पादाब्जां सुरसौख्य प्रदायिनीम् ।
सुन्दरीगण संसेव्यां सेवे धूमावती महम् ॥
हेरम्बजननीं योग्यां हास्यलास्य विहारिणीम् ।
हारिणीं शत्रुसङ्घानां सेवे धूमावतीमहम् ॥
क्षीरोदतीरसम्वासां क्षीरपान प्रहर्षिताम् ।
क्षणदेशेज्य पादाब्जां सेवे धूमावतीमहम् ॥
चतुस्त्रिंशद्वर्णकानां प्रतिवर्णादिनामभिः ।
कृतं तु हृदयं स्तोत्रं धूमावत्याः सुसिद्धिदम् ॥
य इदं पठति स्तोत्रं पवित्रं पापनाशनम् ।
स प्राप्नोति परां सिद्धिं धूमावत्या प्रसादतः ॥
पठेन्नेकाग्रचित्तो यो यद्यदिच्छति मानवः ।
तत्सर्वं समवाप्नोति सत्यं सत्यं वदाम्यहम् ॥
॥ इति श्री धूमावती हृदयं समाप्तम् ॥

(ચોત્રીસ વર્ણવાળું, પ્રતિવર્ણાદિનામવાળું ધૂમાવતી હૃદય નામક આ સ્તોત્ર સર્વસિદ્ધિ આપનારું છે. આ સ્તોત્રના પાઠથી બધાં પાપનો નાશ થતાં પવિત્રતા પ્રાપ્ત થાય છે. ભગવતી ધૂમાવતીના કૃપાપ્રસાદથી પરમસિદ્ધિ પ્રાપ્ત થાય છે. આ સ્તોત્રનો પાઠ એકાગ્ર ચિત્તે કરવાથી મનુષ્ય જે ઇચ્છા કરે તે બધી જ ઇચ્છા તેની પૂર્ણ થાય છે, એ નિર્વિવાદ સત્ય છે.)

## श्री धूमावती-स्तुति

मेजर बैजनाथ टुस्सू, श्री निवास, नवाब कोठी, नया बाजार, लश्कर, ग्वालियर

जय भगवती धूमावति परमेश्वर्यै नमः । ॐ सत - चित् - आनन्दमयी ॐ परा - गति - दायिनी ॥ १

सर्व - रिद्धि - सिद्धि-प्रदायिनी सर्व-मंगल-कारिणी । सर्व - शक्ति - दायिनी भुक्ति-मुक्ति-प्रदायिनी ॥ २

सर्व - सुख - कारिणी सर्व - मनोरथ - पूरिणी । सर्व - ऐश्वर्य - प्रदायिनी सर्व - ज्ञान - प्रकाशिनी ॥ ३

सर्व - मेधा - प्रज्ञा - विस्तारिणी सर्व-चिन्ता-हारिणी । सर्व-आपत्ति-निवारिणी सर्व-शत्रु-विनाशिनी ॥ ४

सर्व-पाप-शाप-विमोचनी शनिश्चर-दोष-नाशिनी । वृद्धाशरीरिणी भयंकर-रूपिणी वामे वरदहस्तां ॥ ५
दक्षिणे शूर्प - हस्ताम् कागा रथारूढ़ा । धूम्र - बीज-मन्त्रा धूं धूं दरिद्र - नाशिनी ॥६
धूमावती दयावती स्वाहा दुर्भाग्यं, आहुति । अघोर - पूजिता धूमावती मां शक्ति देहि ॥७
ॐ आनन्द मूर्तये नमः सर्व-पीड़ा-निवारिणी । सर्व-सम्पत-करी देवी सर्व-दुष्ट-स्तम्भन-कारिणी ॥८
दुःख-दौर्भाग्य नाशिनी अकाल-मृत्यु-हारिणी देवी । ऋण-मुक्ति-करा मारकेश-दशा-निवारिणी देवी । ९
सर्व-वांछा-पूरिणी देवी सर्व-दुःख-दारिद्र-हारिणी देवी । सर्व-विद्या-प्रदायिनी ॐ मंगल-मूर्तये नमः ॥१०
जय जय जय जगत्-ज्येष्ठा ॥१॥
कहे महेश काटे क्लेश सर्व-आपदा को काल । जो यह पढ़े सात बार उसके सर्व-विघ्न टाल ॥ १२
('कौल-कल्पतरु' चण्डी से उद्धृत)

# ધૂમાવતી અષ્ટક પુણ્ય સ્તોત્ર

ॐ प्रातर्या स्यात् कुमारी कुसुम-कलिकया जप-मालां जपन्ती ।
मध्याह्ने प्रौढ-रूपा विकसित-वदना चारु-नेत्रा निशायाम् ॥
सन्ध्यायां वृद्धा-रूपा गलित-कुच-युगा मुण्ड-मालां वहन्ती ।
सा देवी देव-देवी त्रिभुवन-जननी चण्डिका पातु युष्मान् ॥१

ભગવાન શિવે કહ્યું : જે પ્રાતઃકાળમાં કુમારી સ્વરૂપ ધારણ કરીને ફૂલોની કળીઓની બનેલી માળાથી જપ કરે છે, મધ્યાહ્ન કાળમાં પ્રૌઢ સ્વરૂપમાં પ્રસન્ન મુખથી વિરાજમાન રહે છે. રાત્રિકાળમાં સુંદર આંખોવાળી જોવામાં આવે છે અને સંધ્યા કાળે વૃદ્ધાના રૂપમાં જેના કુચ(સ્તન) યુગલ ગલિત છે અને મુંડમાલા ધારણ કરેલી છે, તેવી ત્રિભુવન જનની દેવદેવી ચંડિકા તમે સર્વની રક્ષા કરો. (૧)

बद्ध्वा खट्वाङ्ग कोटौ कपिल वर जटा मण्डलं पद्म योनेः ।
कृत्वा दैत्योत्तमाङ्गैः स्रजमुरसि शिरः शेखरं तार्क्ष्य पक्षैः ॥
पूर्ण रक्तैः सुराणां यम महिष-महा-शृङ्गमादाय पाणौ ।
पायाद वौ वन्द्य मानः प्रलय मुदितया भैरवः काल रात्र्या ॥२

જે પ્રલયકાળમાં ખટ્વાંગના આગળના ભાગમાં પિંગલ વર્ણના પદ્મયોનિ (બ્રહ્મા)ના શ્રેષ્ઠ જટામંડળને બાંધીને, મસ્તક પર દૈત્યોનાં મુંડોની માળા બનાવીને,

ગરુડની પાંખો દ્વારા શિરનો મુગટ ધારણ કરીને વિરાજે છે અને યમરાજના મહિષ (પાડા)ના વિશાળ શીંગડાંને દેવતાઓના રક્તનો લેપ કરીને તે શીંગડાંને પોતાના હાથમાં ધારણ કરે છે, તથા આ પ્રલયકાળમાં આનંદિત થઈને કાલરાત્રિ જેની વંદના કરે છે તે જ કાળની પણ કાળ છે, જે સર્વની રક્ષા કરો. (૨)

चर्वन्ती ग्रन्थि खण्ड प्रकट कट कटा शब्द सङ्घातमुग्रम् ।
कुर्वाणा प्रेत मध्ये ककह कह कहा हास्यमुग्रं कृशाङ्गी ॥
नित्यं नृत्य प्रमत्ता डमरु डिम डिमान् स्फारयन्ती मुखाब्जम् ।
पायान्नश्चण्डिकेयं झझम झम झमा जल्पमाना भ्रमन्ती ॥३

તીવ્ર 'કટ-કટ' શબ્દ ધ્વનિ સાથે મનુષ્યોનાં હાડકાંને ચાવતી એવી, પ્રેતોની વચમાં જે ક્ષીણ કાયાવાળી ભયંકર ધ્વનિ કરે છે અને 'કકહ કહ કહ' શબ્દથી અટ્ટહાસ્ય કરે છે, ડમરૂનો 'ડિમ્ ડિમ્' ધ્વનિ કરતી એવી પોતાના મુખકમળને ફેલાવે છે, પ્રતિક્ષણ નૃત્ય કરે છે અને આમ તેમ દોડતી એવી 'ઝમમ ઝમ ઝમ' શબ્દનો બડબડાટ કરતી રહે છે તેવી ચંડિકા અમારી રક્ષા કરો. (૩)

टण्टट् टण्टट् टण्टटा प्रकट मट मटा नाद घण्टां वहन्ती ।
स्फ्रें स्फ्रेंङ्कार कारा टक टकित हसा दन्त सङ्घट्ट भीमा ॥
लोलं मुण्डाग्र माला ललह लह लहा लोल लोलोग्र रावम् ।
चर्वन्ती चण्ड मुण्डं मट मट मटितं चर्वयन्ती पुनातु ॥४

જે 'ટણ્ટટ્-ટણ્ટટ્ ટટણ્ટા મટ મટા' આ પ્રકારે ઘોર ઘંટનાદપૂર્વક 'સ્ફ્રેં સ્ફ્રેં સ્ફ્રેં' (स्फ्रें स्फ्रें स्फ्रें) રવ-અવાજ કરે છે, દાંતોને કચકચાવી ભયાનક રૂપથી 'ટક-ટક' શબ્દથી અટ્ટહાસ્ય કરે છે, 'લલહ-લહ લહ' શબ્દથી ઉગ્રરવ(ઘોષ) કરતી, તૃષ્ણાયુક્ત ભાવથી મુંડમાલાને ચાવતી રહે છે અને 'મટ-મટ' શબ્દથી પ્રચંડ મુંડને ચાવે છે, તેવી દેવી અમને બધાને પવિત્ર કરો. (૪)

वामे कर्णे मृगाङ्क प्रलया परिगतं दक्षिणे सूर्य बिम्बम् ।
कण्ठे नक्षत्र हारं वर विकट जटा जूटके मुण्डे मालम् ॥
स्कन्धे कृत्वोरगेन्द्र ध्वज निकर युतं ब्रह्म कङ्काल भारम् ।
संहारे धारयन्ती मम हरतु भयं भद्रदा भद्रकाली ॥५

જે પ્રલયકાળમાં ડાબા કાનમાં ચંદ્રમા, જમણા કાનમાં સૂર્યમંડળ, કંઠમાં નક્ષત્રોનો હાર (નક્ષત્રમાળા), પ્રકાંડ વિકટ જટા-જૂટમાં મુંડમાળા અને ખભા પર નાગેન્દ્ર ધ્વજ સમૂહ અને બ્રહ્મકંકાલ ભાર ધારણ કરીને રહે છે, તે જ કલ્યાણદાયિની ભદ્રકાલી અમારા ભયને દૂર કરો. (૫)

तैलोभ्यक्तैक वेणी त्रपु मय विलसत् कर्णिकाक्रान्त कर्णा ।
लोहेनैकेन कृत्वा चरण नलिन कामात्मनः पाद शोभाम् ॥
दिग् वासा रासभेन ग्रसति जगदिदं या जवा कर्ण पुरा-
वर्षिण्यूर्ध्व प्रवृद्धा ध्वज वितत भुजा साऽसि देवी त्वमेव ॥६

જેના શિર પર એક વેણી સદાને માટે તેલથી ખરડાયેલી રહે છે, કાનોમાં સીસાની બનેલી કર્ણિકા(અલંકાર) છે. એક લોહ આભૂષણ(લોખંડનું ઘરેણું) વડે પોતાના ચરણકમળને શોભાયુક્ત કરે છે, નગ્ન સ્વરૂપે ગધેડા ઉપર સવારી કરીને આ જગતનો જે ગ્રાસ(કોળિયો) કરે છે, જે જપાકુસુમ(જાસુદનાં ફૂલ) કર્ણપુરોની આમ તેમ વર્ષા કરતી રહે છે, જે પોતાની દીર્ઘ ભુજાઓને ઉપર ઉઠાવીને ધ્વજા ફરકાવી રહી છે તે દેવી આપ જ છો. (૬)

संग्रामे हेति कृत्तैः स रुधिर दशनैर्यद् भटानां शिरोभि-
र्मालमाबध्य मूर्ध्नि ध्वज वितत भुजा त्वं श्मशाने प्रविष्टा ॥
दृष्ट्वा भूतैः प्रभूतैः पृथु जघन घना बद्ध नागेन्द्र काञ्ची-
शूलाग्र व्यग्र हस्ता मधु रुधिर मदा ताम्र नेत्रा निशायाम् ॥७

યુદ્ધના ખડ્ગ દ્વારા વીરોના કપાયેલાં રક્તપૂર્ણ મુંડોની માળા શિરમાં બાંધીને ભુજા દ્વારા ધ્વજા ફરકાવતી આપ સ્મશાનમાં પ્રવેશ કરો છો. રાત્રિકાળમાં સ્થૂળ જાંઘ, કમરમાં (કેડમાં) સર્પોનો બનેલ કંદોરો (કટિબંધ) શૂલધારી ચંચળ હાથ, મધુ રૂધિરપાનથી મત્ત આસકત બનીને આપ અસંખ્ય ભૂતોની સાથે ઘૂમતી ફરતી રહો છો. (૭)

दृंष्ट्रा रौद्रे मुखेऽस्मिस्तव विशति जगद् देवि ! सर्व क्षणार्द्धात्
संसारस्यान्त काले नर रुधिर वसा सम्प्लवे धूम धूम्रे ॥
काली कापालिकी त्वं शव शयन रता योगिनी योगमुद्रा ।
रक्ता ऋद्धि कुमारी मरण भयहरा त्वं शिवा चण्ड घण्टा ॥८

હે દેવિ ! સંસારના પ્રલયકાળમાં ભીષણ દાંતવાળું તમારું આ મુખમંડળ અર્ધી જ ક્ષણમાં આ સમગ્ર વિશ્વને પોતાનામાં સમાવી દે છે. તમારું આ મુખમંડળ નર રક્ત, વસા(ચરબી-માંસ)થી પરિવ્યાપ્ત થઈને ધૂમાડાની માફક ધ્રુમ્ર વર્ણનું થઈ જાય છે. તમે જ શબશૈયા પર શયન કરનારી કાપાલિની કાલી છો, તમે જ યોગમુદ્રા યોગિની છો, તમે જ રક્તાઋદ્ધિ, તમે જ કુમારી, તમે જ મૃત્યુ ભયનાશિની અને તમેજ શિવ ચણ્ડઘંટા છો. (૮)

॥ फल श्रुति ॥

ॐ धूमावत्यष्टकं पुण्यं, सर्वापद् विनिवारकम् ।
यः पठेत् साधको भक्त्या, सिद्धिं विन्दति वांछिताम् ॥१

ધૂમાવતીનું આ અષ્ટક મહા કલ્યાણકારી છે, સર્વ આપત્તિઓને દૂર કરનારું છે. જે સાધક ભક્તિપૂર્વક આનો પાઠ કરે છે. તે અભીષ્ટ સિદ્ધિને પ્રાપ્ત કરે છે. (૧)

महाऽऽपदि महा घोरे महा रोगे महा रणे ।
शत्रुच्चाटे मारणादौ, जन्तूनां मोहने तथा ॥२

पठेत् स्तोत्रमिदं देवि ! सर्वत्र सिद्धि भाग् भवेत् ।
देव दानव गन्धर्व यक्ष राक्षस पन्नगाः ॥३
सिंह व्याघ्रादिकाः सर्वे स्तोत्र स्मरणः मात्रतः ।
दूराद दूर तरं यान्ति किं पुनर्मानुषादयः ॥४

મહાન વિપત્તિમાં, મહા ભયાનક દશામાં, મહાન રોગથી પીડિત થતા હોય ત્યારે, મહાયુદ્ધ થતું હોય ત્યારે, શત્રુના ઉચ્ચાટનમાં, મારણ આદિ ષટ્કર્મોમાં તથા પ્રાણીઓને મોહિત કરવામાં હે દેવિ ! આ સ્તોત્રનો પાઠ કરે તો, સર્વ વાતોમાં સફળતા પ્રાપ્ત થશે. દેવ, દાનવ, ગન્ધર્વ, યક્ષો, રાક્ષસો, પન્નગો, સિંહ, વાઘ આદિ સર્વ આ સ્તોત્રના(પાઠ) સ્મરણ માત્રથી જ દૂર દૂર ભાગી જાય છે. પછી મનુષ્ય આદિ સામાન્ય જીવોની તો ગણના શું કરવાની હોય ? (૨-૩-૪)

स्तोत्रेणाने देवेशि ! किं न सिद्धयति भू तले ।
सर्व शान्तिर्भवेद् देवि ! चान्ते निर्वाणतां व्रजेत् ॥५

હે દેવેશિ ! આ સ્તોત્ર દ્વારા પૃથ્વી પર કઈ એવી વાત છે કે જે સિદ્ધ નથી થતી. હે દેવિ ! આનાથી સર્વ પ્રકારની શાંતિ થાય છે અને અંતમાં મોક્ષ પ્રાપ્ત થાય છે. (૫)

(અહીં જે ધૂમાવતી સ્તોત્ર પ્રસ્તુત કરવામાં આવેલ છે, તેનો પાઠ કરવા માત્રથી સાધકમાં વીરભાવ ઉત્પન્ન થાય છે અને તે શત્રુઓ પર પૂર્ણ વિજય પ્રાપ્ત કરે છે. સાધક સો વાર બગલામુખી સ્તોત્ર અથવા માળા જપ કરે અને તેના સ્થાન પર એકવાર ધૂમાવતી સ્તોત્ર અને મંત્રનો જપ કરી લે તો તેને ઉચ્ચતમ તાંત્રિક પ્રભાવ પ્રાપ્ત થાય છે. તાંત્રિક ક્રિયાઓમાં પણ ધૂમાવતીનું સ્થાન ઉચ્ચતમ છે. એટલા માટે કહેવામાં આવે છે કે જે સાધક ધૂમાવતી સિદ્ધ કરી લે છે તે તાંત્રિક બની જાય છે.)

## अष्टोत्तर शतनाम स्तोत्रम्

### ईश्वरोवाच

ॐ धूमावती धूम्रवर्णा धूम्रपान परायणा ।
धूम्राक्षमथिनी धन्या धन्यस्थाननिवासिनी ॥१॥
अघोराचार सन्तुष्टा अघोराचार मण्डिता ।
अघोरमंत्रसम्प्रीता अघोरमंत्र सम्पूजिता ॥२॥
अट्टाट्टहासनिरता मलिनाम्बरधारिणी ।
वृद्धा विरूपा विधवा विद्या च विरलद्विजा ॥३॥
प्रवृद्धघोणा कुमुखी कुटिला कुटिलेक्षणा ।
कराली च करालास्यां कंकाली शूर्पधारिणी ॥४॥
काकध्वजरथारूढा केवला कठिना कुहूः ।
क्षुत्पिपासार्दिता नित्या ललज्जिह्वा दिगम्बरा ॥५॥

